# श्रीहनूमन्नवरत्नपद्यमाला

श्रितजनपरिपालं रामकार्यानुकूलं
धृतशुभगुणजालं यातुतन्त्वार्तिमूलम् ।
स्मितमुखसुकपोलं पीतपाटीरचेलं
पतिनतिनुतिलोलं नौमि वातेशबालम् ॥ १॥

दिनकरसुतमित्रं पञ्चवक्त्रं त्रिनेत्रं
शिशुतनुकृतचित्रं रामकारुण्यपात्रम् ।
अशनिसदृशगात्रं सर्वकार्येषु जैत्रं
भवजलधिवहित्रं स्तौमि वायोः सुपुत्रम् ॥ २॥

मुखविजितशशाङ्कं चेतसा प्राप्तलङ्कं
गतनिशिचरशङ्कं क्षालितात्मीयपङ्कम् ।
नगकुसुमविटङ्कं त्यक्तशापाख्यशृङ्गं
रिपुहृदयलटङ्कं नौमि रामध्वजाङ्कम् ॥ ३॥

दशरथसुतदूतं सौरसास्योद्गगीतं
हतशशिरिपुसूतं तार्क्ष्यवेगातिपातम् ।
मितसगरजखातं मार्गिताशेषकेतं
नयनपथगसीतं भावये वातजातम् ॥ ४॥

निगदितसुखिरामं सान्त्वितैक्ष्वाकुवामं
कृतविपिनविरामं सर्वरक्षोऽतिभीमम् ।
रिपुकुलकलिकामं रावणाख्याब्जसोमं
मतरिपुबलसीमं चिन्तये तं निकामम् ॥ ५॥

निहतनिखिलशूरः पुच्छवह्निप्रचारः

द्रुतगतपरतीरः कीर्तिताशेषसारः ।
समसितमधुधारो जातपम्पावतारो
नतरघुकुलवीरः पातु वायोः कुमारः ॥ ६ ॥

कृतरघुपतितोषः प्राप्तसीताङ्गभूषः
कथितचरितशेषः प्रोक्तसीतोक्तभाषः ।
मिलितसखिहनूषः सेतुजाताभिलाषः
कृतनिजपरिपोषः पातु कीनाशवेषः ॥ ७ ॥

क्षपितबलिविपक्षो मुष्टिपातार्तरक्षः
रविजनपरिमोक्षो लक्ष्मणोद्धारदक्षः ।
हृतमृतिपरपक्षो जातसीतापरोक्षो
विरमितरणदीक्षः पातु मां पिङ्गलाक्षः ॥ ८ ॥

सुखितसुहृदनीकः पुष्पयानप्रतीकः
शमितभरतशोको दृष्टरामाभिषेकः ।
स्मृतपतिसुखिसेको रामभक्तप्रवेकः
पवनसुकृतपाकः पातु मां वायुतोकः ॥ ९ ॥

अष्टाश्रीकृतनवरत्नपद्यमालां
भक्त्या श्रीहनुमदुरःस्थले निबद्धाम् ।
सङ्गृह्य प्रयतमना जपेत् सदा यः
सोऽभीष्टं हरिवरतो लभेत शीघ्रम् ॥ १० ॥

इति श्रीहनूमन्नवरत्नपद्यमाला समाप्ता ।